# अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य

कलकत्तामहाधिवेशनप्रसंगे समायोजितायाः




## भारतीय-संस्कृति-परिषदः

सभापतीनां

प्राच्य-पाश्चात्त्य-विद्याविशेषज्ञानां

दरभंगासंस्कृतविश्वविद्यालयस्योपकुलपतीनां

महामहोपाध्यायानां डा० श्रीउमेशमिश्रमहोदयानाम्

# अध्यक्षीयमभिभाषणम्

स्थानम्

**महाजातिसदनम्**

कलकत्ता

दिनांक :

३ जुलाई १९६१ ई०

॥ श्रीः ॥

# भारतीय-संस्कृतिः

युष्माकं काचिदन्या जगदुपरि समुद्भूतलावण्यवन्या
धन्या शैलेन्द्रकन्या त्रिभुवनजननी विश्वमान्या वदान्या।
निःशङ्कं शङ्कराङ्के तडिदिव सहसा प्रोल्लसन्ती हसन्ती
रक्षादक्षाविवक्षावलिविलयकरी शाङ्करी शङ्करोतु ॥१॥
ब्रह्मापि यां नौति नुतः सुरेन्द्रैर्यामर्चितोऽप्यर्चयतीन्दुमौलिः।
यां ध्यायति ध्यानगतोऽपि विष्णुस्तामादिशक्तिं शिरसा प्रपद्ये ॥२॥

महामहिमशालिराज्यपालश्रीगाडगिलमहोदयाः, श्रीसुनीतिकुमारचाटुर्ज्या-महाभागाः विद्वांसः सभ्याः, सज्जनाश्च !

बहुजनशिरोमणिसंकुलायां विविधप्रकारेण समृद्धायां धनधान्यादिसुसम्पन्नायामस्यां कलिकातानगर्याम् 'अखिलभारतीयसंस्कृतसाहित्यमहासम्मेलनस्य' षड्विंशाधिवेशनावसरे भारतीयसंस्कृतभाषाशास्त्राणां समुन्नत्यै बद्धपरिकरैर्भवद्भिः 'संस्कृतशिक्षापरिषदः', 'भारतीयसंस्कृतिपरिषद'-श्चानेन महद्विशेषायोजनेन न केवलं संस्कृतानुरागिणां विदुषां ज्ञानिनाञ्चापि तु समस्तभारतीयानां यत्कल्याणमार्गप्रदर्शनं क्रियते, तेन वयं सर्वे नितरां प्रसन्नाः कृतज्ञाश्च। तत्रापि भारतीयसंस्कृतिसमुद्धरणार्थं निरन्तरं कृतप्रयत्नस्य राष्ट्रपतेः डाक्टरोपाधिसमुल्लसितस्य भारतीयज्ञानविज्ञानगौरवभूतस्य देशरत्नस्य श्रीराजेन्द्रप्रसादमहाशयस्य तथा चान्येषामपि तत्समकल्पमहाशयानां समक्षे तेषामेव करकमलेन संस्कृतभाषायाः शास्त्राणाञ्च विदुषां भारतीयसंस्कृतेश्च यादृशस्य समादरस्यायोजनं सुसम्पादितं तेनाचिरेणैवास्मद्देशीयानामुन्नतिः समुज्ज्वला विश्वस्मिन् परिगणनीया च भविष्यतीति सम्भाव्यते। तत्र मादृशानां लौकिकव्यवहारानभिज्ञानां गीर्वाणवाणीचरणसेवकानामुपरि यदद्याध्यक्षतापदभारं विन्यस्यालौकिकसम्मानं भवद्भिः प्रदर्शितं तत्केवलं भवतां सरस्वतीचरणसेवकानामौदार्यं परगुणपरमाणून् नित्यं पर्वतीकृत्य परान् प्रति प्रदर्शनस्य चिराभ्यासञ्च द्योतयति। नास्ति लेशतोऽपि मे योग्यतायाः किमपि कारणत्वमत्र। अस्तु, तथापि एतदर्थं कृतकृत्योऽस्मि। भवतामनुग्रहं सर्वथा सबहुमानं सप्रश्रयं धन्यवादप्रदर्शनपूर्वकं स्वीकृत्य कार्यभारं स्वीकरोमीति।

विदितमस्तु सर्वेषां यत्सर्वे देशाः सर्वे च भौतिकदैविकपदार्थाः सर्वे च जीवाः मनुष्याश्चानादिकालतो मायागर्भन्तिर्निर्हर्तैर्विभिन्नशुभाशुभकर्मभिर्निगडितास्तैरेव

चक्रभ्रमिवत् प्रेरिता अनवरतं सुखदुःखभोगान् अनुभवन्ति। अत्र नादृष्टं, न चेश्वरो, न वा काऽप्यन्या शक्तिः कारणम्। अनादिकालतः स्वकर्मणा प्रेरितस्य जीवस्यैव कर्म कारणम्। अत एव वस्तुतः स्वस्वकर्मणि कथञ्चित् समर्था अपि जीवाः स्थूलदृष्ट्या साधारणतया च न कोऽपि जीवः स्वतन्त्रः। परन्तु यदि अतुलशक्तिसम्पन्नस्य गुरोर्भक्तवत्सलस्य भगवतो वाऽनुग्रहः कदाचित् तस्यैव जीवस्य पूर्वोपार्जितकर्मणः प्रभावेण भवेत् तदा आध्यात्मिकशक्तिबलेन पूर्वोपार्जित-तत्तत्कर्मणां विपाकमापाद्य कर्मणो गतिं कथञ्चन कियत्कालपर्यन्तमपाकर्तुमपि समर्थो भवति जीवः। एतत्सर्वं मनुष्योचितमेव कर्म।

एवं कर्मप्रभावेण भवचक्रमारुह्योच्चावचकर्मफलमनुभवन् अनेकजन्मायास-सञ्चालिततपश्चर्याभिर्महता प्रयत्नेन लब्धपुण्यनिचयेन दुर्लभां मनुष्ययोनिं प्राप्नोति जीवः। अत एव शङ्कराचार्येणोक्तम्——

**'लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं**
**तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्।**
**यः स्वात्ममुक्तौ न यतेत मूढधीः**
**स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्॥**

मनुष्ययोनिं गतो जीवः स्वल्पेनाधिकेन वाऽशुभकर्मणाऽपि निम्नस्तरां योनिं न लभते, लभ्येत वा अल्पकालं तस्योपभोगं सम्पाद्याचिरेणैव कालेन पुनर्मनुष्ययोनिं प्राप्नोतीति कर्मणो गतिस्तथैव च गुरुजनानामनुभवः। अत एवोक्तम् मनुना——

**भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः।**
**बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः॥**

विविधासु योनिषु परिभ्रमञ्जीवः पूर्वपूर्वजन्मोपार्जितवासनासंस्कारेण सहैव संस्काररूपेणैव वा तत्तज्जन्मोपार्जितं बैजिकं गार्भिकं च पापं जन्मत एव सञ्चिनोति। सहैव पुनः तत्तद्वंशगोत्रप्रवर्तकानां पितृभूतानाम् ऋणीणां शोणितमपि अनवच्छिन्न-रूपेणानयति परम्परातो जीवो येन हेतुना 'ब्राह्मणोऽहम्', 'शाण्डिल्यगोत्रोऽहम्', 'पराशरगोत्रोऽह'मित्याद्यनुभववाक्यं सङ्गच्छते। अयमभिप्रायः यत् सहस्रसहस्र-जन्मानन्तरमपि गोत्रप्रवर्त्तकस्य शाण्डिल्यर्षेः शुक्रं शोणितञ्चाक्षुण्णरूपेण देवदत्तस्य स्थूलशरीरे अद्यापि प्रवहति येन हेतुना सगोत्रविवाहनिषेधो भारतीयैः स्वीकृतः स्मृतिकारैश्च प्रमाणीकृतः। परन्तु यथा अनेकदूरदेशपरिभ्रमणेन तत्तत्स्थानस्थ-गुणदोषादीन् आनयति किमपि यानं दूषयति च स्वाङ्गानि पुनस्तेषामङ्गानां नियत-रूपेण संस्कारो नितरामपेक्षितो भवति। यथा वा समृद्धशालिशस्यसम्पादनार्थं क्षेत्राणां कर्षणादिविविधव्यापारैः संस्कारोऽत्यन्तमपेक्षितो भवति, क्रियते च तथैव कृषकैः, तथैव नरजन्मचरमलक्ष्यचतुर्वर्गप्राप्तये अनेकजन्मोपार्जितानां परम्परा-

गतानां नरशरीरस्य दोषाणां मलानां संस्कारः परिमार्जनञ्च नितरामपेक्षितं भवति अन्यथा लक्ष्यसिद्धिः कदाचिदपि न भवितुमर्हति। अत एवोक्तम् मनुना—

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥**
**गार्भैर्होमैर्जातकर्म चौडमौञ्जीनिबन्धनैः ।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥**

अन्यच्चानेनैव विवरणेनैतदपि स्पष्टं भवति यदस्मदादीनां स्थूलशरीरं व्यष्टिभावेन समष्टिभावेन च स्वतन्त्ररूपेण पूर्वपूर्वजन्मनां विविधशुभाशुभकर्मणाम् अनादिवासनानां तत्तद्देशकालकर्मणाञ्च प्रत्यक्षभूतम् ऐतिहासिकघटनाचक्रस्वरूपमेव वर्तते। यदि कोऽपि तपस्वी दैवज्ञो वा ईदृशशक्तिसम्पन्नो भवेत्तदानीं स कमपि जीवं मनुष्यं वा दृष्ट्वैवानादिकालागतं सर्वांशपूर्णं न केवलं तस्य मनुष्यस्यापि तु तत्तत्कालिकघटनाचक्रकलापस्येतिहासं श्रावयितुं समर्थः स्यात्। एतच्च शुकजावालिकथायां कादम्वर्यां विशेषेण निरूपितं बाणभट्टेन, अन्येनापि पुराणेषु।

अस्तु, संस्कारश्च न सदाचारपालनमन्तरा सफलः स्यात्। सदाचार एव हि सर्वेषां धर्माणां शुभकर्मणां चतुर्वर्गफलप्राप्तये महत्साधनं वर्तते। अत एव मनुना भिन्न-भिन्नप्रकरणेषु सदाचारस्य प्राधान्यं वर्णितम्। तद्यथा—

**'चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः'।**
**'आचारः परमो धर्मः'।**
**'आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत्' ॥**
**'सर्वस्य तपसो मूलमाचारं जगृहुः परम्' ॥**

इत्यादि।

तस्मात् सदाचारपालनेनैव मनुष्यो जीवने साफल्यं भजते। यावत् पर्यन्तं भक्तवत्सलस्य भगवतोऽनुग्रहः ऋषीणां तपस्विनां गुरुजनानाञ्चानुकम्पा सदुपदेशपूर्वकं न भविष्यति तावत् पर्यन्तं पूर्वपूर्वजन्मोपार्जितानां दोषपापादीनां मलानां च प्रक्षालनं नैव भवितुमर्हति। अथ च यावत्कालं पुनः जिज्ञासूनां सदाचारनिष्ठानां सत्कर्मप्रवृत्तानां जीवानां निरन्तरश्रद्धादिपूर्वकश्रवणमनननिदिध्यासनादिभिः चतुर्वर्गफलप्राप्तये कर्त्तव्यबुद्ध्या चेष्टा प्रवृत्तिर्वा न भविष्यति तावत् पर्यन्तं गुरुजनानां सन्मार्गप्रदर्शनेनापि साफल्यं न समागमिष्यति। एतत्सर्वं पुनः सदाचारपरिपालनेन फलमावहिष्यतीति मे विश्वासः।

वस्तुतोऽस्माकं भारतीयानां जीवने यत्किमपि परम्परागतं दैनन्दिनं कर्म भवति तत्सर्वं आत्मशुद्ध्यर्थं, देहशुद्ध्यर्थं, भूतभौतिकादिशुद्ध्यर्थमेव भवति।

एषा एव अस्मदीया संस्कृतिः। अस्या एव संरक्षणेनास्माकं जीवनं सफलं भविष्यति। अत एवोक्तं मनुना--

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।**

दुर्लभं नरजन्म लब्ध्वा शास्त्राणि चाधीत्य यदि सदाचारपालनं न क्रियते संस्कृतिमनुसृत्य अन्तःकरणान्मलादिप्रक्षालनं वा न क्रियते, तदा अनादिकालतः परम्परागतायाः संस्कृतेः रक्षा न भवितुमर्हति। मनुष्यस्य स्थूलशरीरमेव, यथोक्तं पूर्वं, परम्परागतायाः संस्कृतेर्वास्तविकं स्वरूपं वर्तते।

एवं संस्कृतेः पूर्वपूर्वजन्मपरम्परागतेतिहासं स्वरूपञ्च निरूप्यास्याः संरक्षणोपायः कथञ्चिदालोच्यते--

विषमेऽस्मिन् घोरे कलिकाले विशुद्धपाश्चात्यशिक्षादीक्षाप्रभावेण तेषामाचाराद्यनुकरणेन च भारतीयसदाचारहीनानां चाकचिक्यदर्शनेन विस्मृतभारतीयज्ञानविज्ञानानां बाह्यदृष्ट्या सुशिक्षितानामपि विक्षेपशक्तिप्रभावेण विमूढानां लुप्तश्रद्धानां जनानां मनसि भारतीयविशुद्धसंस्कृतेः स्वरूपनिरूपणं लुप्तविश्वासश्रद्धादिसद्गुणानां पुनरुत्पादनं कथं कर्त्तुं शक्यत इति क्लेशदायिनी समस्याऽस्माकं वर्तते। तत्र सन्ति बहवः सदुपायाः। तेषामाकरग्रन्थेषु वर्णितानामपि समयस्य चाल्पीयस्त्वात् कार्यभारस्य च गुरुत्वात् कस्याप्युपायविशेषस्यैवात्र चर्चा भवतां जिज्ञासूनां पुरतः प्रस्तूयते।

प्रथमं तावत् अस्माकं देशे पाठ्यप्रणाली प्रारम्भिककक्षातः एवारभ्यान्तिमश्रेणीपर्य्यन्तं भारतीयानां कल्याणाय तेषां प्रकृत्यनुसारेण देशकालानुरोधेनाचिरेणैव कालेन विधेया। यस्मिन् देशे प्रदेशे वा यादृशस्य ज्ञानविज्ञानसम्पादनस्यावश्यकता भवेत् तादृशस्यैव ज्ञानविज्ञानसम्पादनस्य कृते तदनुकूलं साधनं सम्पादनीयम्। यत्र प्रदेशे यादृशी भूमिः तत्र तदनुकूलमेव शस्यादीनामुत्पादनं समुचिनम्। तदानीमेव सा भूमिः समर्थप्रवृत्तिजनका तत्फलं च सुफलम्भवितुमर्हति तस्य कृषकोऽपि तदैव विवेकी कथ्यते, नान्यथा। पञ्चनदप्रान्ते गोधूमोत्पादनार्थं यादृशी फलवती भूमिः वर्तते न तादृशी मिथिलायां वङ्गदेशे वा। अथ च शाल्यर्थं यादृशी उर्वरा भूमिः मिथिलायां वङ्गदेशे वा न तादृशी पञ्चनदप्रदेशे। अत एव देशजनहितार्थं विवेकपुरस्सरं व्यवस्था करणीया। यथैव बाह्ये जगति प्रकृतेः वैचित्र्यं वर्तते तथैव मनुष्यान्तःकरणेऽपि। प्रकृतिं तिरस्कृत्य कल्याणं नैव लभ्यते।

भारतीयानां, नहि नहि सर्वेषां, जीवनस्य लक्ष्यं चतुर्वर्गफलप्राप्तिरेव तारतम्यक्रमेण वर्तते। तदर्थमेव सर्वे वेदाः, सर्वं वैदिकसाहित्यं, सर्वाणि च शास्त्राणि, ज्ञानविज्ञानसम्पादनानि च सन्ति। पाश्चात्यदेशेऽपि ज्ञानविज्ञानादिद्वारा

प्रकृतेर्विजयोऽपि तदर्थमेव। तथापि तत्तद्देशकालानुकूलजलवाय्वादिप्रकृतिविकृतीनामनुरोधेनैव तत्तद्देशप्रसूतानां जीवानां पाठ्यप्रणाली नितरामपेक्षिता। अत्र गतानुगतिकत्वं, मानुषिकरागद्वेषादिकं, व्यक्तिविशेषगतदुराग्रहादिकम् अन्तःकरणदौर्बल्यञ्च न कदाचिदपि आनेतव्यम्। केवलं भारतीयानां कल्याणं ज्ञानविज्ञानवृद्धिश्च केन प्रकारेण भविष्यतीति सर्वदा मनसिकृत्य विधानं विधेयम्। प्रतिकूलस्वभावानां परम्परानुकरणं सर्वथाऽनुचितमेव। तदेवोक्तं महाकविना कालिदासेन––

**पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।**
**सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः॥**

एवं सर्वतो विविच्य संस्कृतेः रक्षा यदि कृता भवेत् तदैवास्माकं कल्याणं स्यात्।

सदाचारपालनमेव संस्कृतिमूलम्। तद्रक्षणे यावच्छक्यं प्रयत्नो विधेयः। विषयेऽस्मिन् अनाचारभ्रष्टाचारादिसम्पन्ने काले बालकेषु-बालिकासु, स्त्रीषु-पुरुषेषु, छात्रेषु-अध्यापकेषु च तदन्येष्वपि प्रायः सर्वत्र निरंकुशोच्छृङ्खलत्वमवलोक्यते। अनेन विघ्नसमूहेन कार्यक्षेत्रे महान् प्रत्यूहो दृश्यते। अस्य संयमोपायश्चिन्तनीयः। विचार्यमाणे एतत्स्पष्टं प्रतिभाति यदस्माभिः सदाचरणस्यावहेलना प्रतिपदं क्रियते। अत एवेदृशी दुरवस्था सर्वत्र वरीवर्ति। सदाचारस्य व्याख्यायां जिज्ञास्यमानायां सन्चासौ आचारः, सतां वा आचारः इति उभयमपि भवति। योऽपि विग्रहः स्वीक्रियते सर्वत्र आचारस्य शुद्धिः अभिप्रेताऽस्ति, 'आचारश्चैव साधूनां' धर्मे कर्त्तव्ये च प्रमाणमस्ति। अथ च तदेव हि सत्कर्म, स एव धर्मः, स एव सदाचारः, तदेव हि मनुष्योचितं कर्म यस्याचरणे जीवनस्य चरमलक्ष्यप्राप्तिमार्गे जिज्ञासुः साधको वा अग्रेसरो भवति लक्ष्यञ्च क्रमशो निकटवर्ति भवति तथा अज्ञानं दूरं याति। तस्मात् श्रुतिस्मृत्यविरोधेन तत्तद्देशकालमनुचिन्त्याप्ततर्कानुभवानां साहाय्येन सदाचारस्यापि विचारोऽपेक्षितः। नहि यादृशं कर्म पाश्चात्येषु सदाचार इत्युच्यते तादृशमेव कर्म भारतेऽपि सदाचारो भवितुमर्हति। अत एवोक्तं मनुना––

**यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।**
**वर्णानां सान्तरालानां स सदाचार उच्यते॥**

सदाचारपालनमन्तरा न कोऽपि धर्मो नो ज्ञानं न वा शास्त्रानुशीलनं न च विज्ञानं देशजनहिताय भवितुमर्हति। भारतीयानां विश्वस्मिन् यद्गौरवमादरः प्रतिष्ठा वा वर्तते यस्य प्रसादेन सन्तोषः शान्तिश्चात्राधुनापि विराजते यदर्थं चाखिलं विश्वं भारतीयदर्शनादिशास्त्राणामनुशीलनं करोति, तत्सर्वं सदाचारपालनस्यैव प्रभावः। यमनुसृत्य भारते रामकृष्णबुद्धादीनां प्रख्यातिर्बभूव स

सदाचार एव। अनेनैव सर्वे देशाः प्रभाविता बभूवुः। अस्यैव प्रभावेण मनुनोक्तम्—

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।**

ईदृशस्यामूल्यसाधनस्य रक्षणेन, आचरणेनोपदेशेन च यद्यस्माभिः स्वजीवनं सफलं क्रियेत भारतीय-संस्कृतेश्च रक्षा च क्रियेत तदानीमद्यापि सर्वेषां मानवानां शिरोमणिर्भारतवर्षम्। भवन्तु ते पाश्चात्याः वैज्ञानिके जगति महान्तः, परन्तु शान्तिराज्ये तु भारतीयानामेव गौरवमक्षुण्णं स्यात्। अस्य रक्षणे पालने च महत्कष्टमनुभूयते इति तु सत्यम् किन्तु कष्टं विना किं कर्म साधयितुं समर्थो जनो भवति? किं न स्मर्यते—

**ब्राह्मणस्य शरीरं हि क्षुद्रकामाय नेष्यते।**
**कृच्छ्राय तपसे चैव प्रेत्यानन्तसुखाय च॥**

इत्येवास्माकं भारतीयानां लक्ष्यं, गन्तव्यपदं, गौरवस्थानं, संस्कृतेः पारमार्थिकं च स्वरूपम्। अस्यानुसरणेनैव भारतीयसंस्कृतेः रक्षा भवितुमर्हति। सदाचार-पालनद्वारा अन्तःकरणस्य, बुद्धेश्व संस्कारो भवति, तदनु सभ्यता मनुष्येषु पदं कुरुते। ज्ञानञ्च लभते जनः। ततश्चतुर्वर्गफलप्राप्तिर्भविष्यतीति त्रिकाल-दर्शिनामृषीणां वचनम्। न तन्मिथ्या भवितुमर्हति। अन्यथा असंस्कृतो जीवः असभ्यो भूत्वा जीवनलक्ष्याच्च्युतिमधिगच्छतीति।

एवंभूतायाः संस्कृतेः स्वरूपपरिचयार्थं भारतीयैः अवश्यमेव संस्कृतभाषा अध्येतव्या। अस्यां भाषायां माधुर्यं, स्वाभाविकत्वं तु अस्त्येव किन्तु सहैवास्माकं दोषाणामन्तःकरणस्थमलानां रागद्वेषादीनामपाकरणाय काप्यचिन्तनीया शक्ति-र्वर्तते। प्रतिपुरुषं यत् पार्थक्यमनुभूयते तदपि समूलमुच्छिद्य पुनरेकीकर्तुं स्वभावतः एव प्रभवति एषा भाषा। एवं कृते परस्परप्रेमरज्जुर्दृढ़ा भवति। विनयं पात्रताञ्च लभते संस्कृतभाषाध्यायी जनः।

संस्कृतभाषायां बहवः ईदृशाः शब्दाः सन्ति ये अनादिकालतः तपस्विभिः ऋषिभिः प्रयुक्ताः तैः उच्चरिताः सन्तः पवित्राः, यानुच्चार्यापि जनाः निर्धूतपापाः भवन्ति। अस्याः भाषायाः प्रत्येकं शब्दः, जीववत्, परम्परागतसंस्कृतेः जीवत इतिहासस्वरूपम् एव। अत एव वैयाकरणैरुच्यते—

एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति।

वस्तुतः शब्दः खलु परब्रह्मपरमात्मनः स्वरूपमेव। तस्य ज्ञानेन सर्वं विज्ञातं भवतीति। अतः भारतीयैः संस्कृतभाषा अनिवार्यरूपेण पठनीया। अनेनैव संस्कृतेः परिचयो रक्षा च भविष्यति। एवमेव संस्कृतभाषानिबद्धशास्त्रा-

णामध्ययनं तत्त्वदृष्टचा करणीयम् । शास्त्रं हि ज्ञानिनां त्रिकालदर्शिनां साक्षात् स्वपरिपक्वानुभवस्य लोककल्याणार्थं लिपिबद्धं रूपम् । यादृशकर्मणा जनानां कल्याणं भवितुमर्हति तादृशस्यैव कर्मणः उपदेशरूपेण व्याख्यानं ऋषिभिः कृतं शास्त्रेषु । ईदृशस्य शास्त्रस्य साहाय्येन यदि जनाः जीवनयापनं कुर्वन्ति तदानीं महत्कल्याणं स्यात् । तदेव तु परमं पदम् । तदैव संस्कृतेः रक्षा भवितुमर्हति ।

संस्कृतभाषायाः द्विविधं रूपम् । प्रथमं तावत् साहित्यादिग्रन्थरचनार्थम् । साहित्ये विविधप्रकारेण पाण्डित्यप्रदर्शनं शब्दविन्यासद्वारा ग्रन्थकर्त्रा क्रियते । अत एव तत्र काठिन्यं दृश्यते । तत्तु स्वभावसिद्धम् । यथोक्तं पण्डितराजेन––

**'नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः' ।**

वासवदत्ताकादम्बरीसुलोचनामाधवादयो हि ग्रन्थाः एतस्योदाहरणरूपाः वर्तन्ते । परन्तु अन्यदपि अस्याः परिशुद्धं स्वरूपमस्ति । तत्रापि तदेव माधुर्यं, लालित्यं शब्दरचनासौष्ठवम् । सा पुनः अतिसरला, परिशुद्धा, भारतीयप्रान्तीयभाषाणाम् अतिसन्निकटा सर्वैरर्धशिक्षितैरशिक्षितैरपि अनायासेन बोधगम्या । यद्यपि प्राकृतो जनः अनया सरलयाऽपि भाषया अध्ययनमन्तरा स्वहृद्गतभावान् प्रकाशयितुं न समर्थः किन्तु परेषां व्याख्यानं श्रुत्वा तद्गतभावान् अवगन्तुं सर्वथा समर्था इति त्वस्माकमनुभवसिद्धम् । का कथा भारतीयानां, विदेशीयाः अपि अनया प्रतिपादितान् भावान् अवगच्छन्ति । ईदृशी सरला मधुरा संस्कृतभाषा स्वान्तःकरणसद्भावान् वक्तुः उद्वहन्ती परान् बोधयितुं समर्था भारतस्य राष्ट्रभाषाऽपि भवितुमर्हतीति ममापि विश्वासः । एवञ्चेत् प्रान्तीयभाषाकलहस्यापि विनाशो भविष्यति । रागद्वेषादिदुर्गुणानामपि लोपः स्यात् ।

परञ्चानेन एतन्न कदापि मन्तव्यं यत् तत्तत्प्रान्तीयाः मैथिलीवङ्गासमगुर्जरतामिलाद्याधुनिकप्राचीनभाषाः अवहेलनायोग्याः सन्ति । एतासु सर्वासु भाषासु प्रत्यक्षरमनेकसहस्रवर्षागतपरम्परायाः अलौकिकी संस्कृतिः अनादिकालतस्तत्प्रान्तीयैतिहासिकघटनाचक्रस्य जीवत्स्वरूपं च निहितमस्ति । ये केचन एतासां भाषाणामवहेलनां कुर्वन्ति ते संकुचितहृदयाः अदूरदर्शिनः पक्षपातपूर्णाः भारतीयसंस्कृतेः शत्रवः सन्तीति ।

अन्यच्च भारतीयानां संस्कृतेः विश्लेषणपूर्वकं व्यष्टिसमष्टिरूपेण स्वरूपपरिज्ञानार्थं तस्याश्च जीवत्स्वरूपमादर्शे प्रतिबिम्बितमिव द्रष्टुं यदि कोऽपि इच्छेत् तदा यानि अष्टादश पुराणानि, अष्टादशोपपुराणानि, महाभारतरामायणादीनि च सरलभाषया निबद्धानि तानि सर्वैः भूयो भूयः अध्येतव्यानि । एतेषु व्यापकरूपेणोदाहरणप्रत्युदाहरणद्वारा भारतीयसंस्कृतेः साक्षाज्जीवत्स्वरूपं प्रतिपादितमस्ति । तानि अधीत्य मत्वा च सर्वे अल्पायासेनैव ऐहिकपारलौकिक-

विषयस्य जीवनरहस्यस्य चरमानन्दप्राप्त्युपायस्य च ज्ञानमधिगमिष्यन्ति तदनुकूलाचरणेन शुभकर्मणाम् पुण्यफलानामुदयात् जीवनं सफलं कर्तुं शक्नुवन्ति। शिक्षितानाम् अर्धशिक्षितानां विशेषतोऽशिक्षितानां जनानां कृते भारतीयसंस्कृतपरिज्ञानार्थं स्वस्वजीवनतत्त्वरहस्यावलोकनार्थं चतुर्वर्गसम्पादनार्थञ्च यादृशी सुसज्जिता मनोरञ्जनप्रदा सामग्री कान्तासम्मितोपदेशवत् एतेषु ग्रन्थरत्नेषु निगूढाऽस्ति न तादृशी सामग्री आपामरजनानां कृते वस्तुतो वेदादिशास्त्रेष्वपि दृश्यते। एषामध्ययनाध्यापनानुशीलनैः परमतत्त्वविषयकं लौकिकञ्च सर्वं ज्ञानमनायासेनैवावगन्तुं शक्नुवन्ति कोमलबुद्धयोऽपि जनाः। एतेष्वेव ग्रन्थेषु भारतीयपरम्परागतगुणदोषादीनां शुभाशुभकर्मणां तेषां विपाकादीनां जीवत्स्वरूपमस्माकं संस्कृतेः सभ्यतायाश्च सर्वांशपूर्णं स्वरूपञ्च विश्लेषणपूर्वकमुदाहरणप्रत्युदाहरणद्वारा निरूपितमस्ति। यदि कोऽपि कदाचित् भारतीयसंस्कृतेः सभ्यतायाश्चैतिहासिकरूपं वैशिष्टयं वा ज्ञातुमिच्छेत्तदानीमेतेषामेव मुहुर्मुहुः पठनेन मननेन च सफलतां यास्यति। नास्ति एतत्समः कोऽप्यन्यो ग्रन्थो भारतीय-धार्मिकसामाजिकाध्यात्मिक-लौकिकालौकिकविषयाणाणामनादिकालतः परम्परागतः समागतानां स्वरूपस्येतिहासस्य च परिज्ञानाय। एतेषां ज्ञानं यथा भारतीयेषु अल्पायासेन भवेत् अध्ययनाध्यापनस्य प्रचारो भवेत् तथा करणीयम्। तत्र द्विविधः उपायः प्रदर्श्यते।

प्रथमस्तावत्—सर्वस्मिन् आंग्लसंस्कृतादिविद्यालयेषु प्रथमकक्षातः प्रारभ्य विश्वविद्यालयेषु चरमकक्षापर्यन्तं भारतीयशास्त्रपरिगणितासु संस्कृतादिभाषासु अपरिगणितासु च मैथिल्यादिव्यापकभाषासु पुराणानामेकोपक्रमतः तत्तद्भाषाभिज्ञैर्विशिष्टविद्वद्भिः परिशुद्धानुवादं कारयित्वा तारतम्यक्रमेण यथा सर्वेषां पौराणिकतत्त्वानां कथानां चाध्यापनस्य व्यवस्था भवेत्तथा अचिरेणैव शासनानुरोधेन कार्या। तदानीं सर्वेषामनायासेनैव भारतीयसंस्कृतेः इतिहासस्य च ज्ञानं भविष्यति। एवं कृते सर्वे बालकाः पुराणेषु शिक्षिताः ज्ञानवन्तो विनयावनताः सभ्याश्च भविष्यन्ति। देशविद्रोहग्रामकलहगृहकोलाहलादीनामशान्तिप्रदानां समाप्तिर्भविष्यति। भारते पुनः शान्तिसाम्राज्यस्य स्थापना भविष्यति। सर्वे च सुखिनः स्युः देशस्योन्नतिश्च भविष्यति।

अपरोप्युपायः कश्चिद्वर्तते। भारते जनानां सर्वतोऽधिका संख्या ग्रामेषु वर्तते तत्र तेषां कृते ज्ञानप्रदस्य भारतीयसंस्कृतिरहस्योद्घाटनस्य च काऽपि व्यवस्था नास्माभिः न च राज्यसंरक्षकैः अधुनाऽपि कृता। ते ग्रामवासिनः अद्यापि भारतीयज्ञानविज्ञानेभ्यः सर्वथा वञ्चिताः सन्ति। अत एव विश्वविद्यालयादिज्ञानविज्ञानशिक्षानुशीलनं प्रति तेषां पराङ्नुखत्वमौदासीन्यञ्च लक्ष्यते। पुराकालेऽपि वेदादिकठिनशास्त्रेषु तेषां प्रवेशोऽसम्भवः आसीत्, परन्तु ते भारतीयज्ञानविज्ञा-

नादिभ्यो वञ्चिताः मा भवेयुः एतदर्थमेव यानि ज्ञानविज्ञानादितत्त्वानि वेदादिशास्त्रेषु कठोरधियां कृते प्रतिपादितानि तानि सर्वाणि पुराणोपपुराणमहाभारतरामायणादिषु सुहृत्सम्मितोपदेशवत् क्वचित् कान्तासम्मितोपदेशवत् वर्णितानि। तानि तथा मनोरञ्जकानि यत्सुकोमलधियामनायासेनैव हृदयङ्गमानि भवन्तीति व्यवस्था पूर्वतः एव कृतास्ति। परन्तु अस्माभिः एते ग्रामीणाः सर्वथा विस्मृताः। ते न जानन्ति कानि जीवनस्य रहस्यानि एतेषु ग्रन्थेषु तेषामेव कृते सन्ति। अत्र न तेषां लेशतोऽपि दोषः। वस्तुतः वयमेवात्र सर्वथा अपराधिनः। अस्तु, अद्य पर्यन्तं यदभूत् यदस्माभिः अन्यायः कृतः, तस्य प्रायश्चित्तमधुना करणीयम्। तदर्थं मे मनसि एवं प्रतिभाति यत्प्रारम्भकाले ग्रामत्रयमध्ये राज्यशिक्षाविभागैः एकः पुराणविद्यालयः स्थापनीयः। तत्र सर्वथा सुयोग्यः कश्चित् पुराणवाचको नियोज्यः। ग्रामीणानामानुकूल्येन होराद्वयं केवलं कस्यापि पुराणस्य पारायणं तेन विधेयम्। संस्कृतभाषा मधुरालालित्यपूर्णा तयैव प्रथमं ग्रामवासिनां हृदयं स्वसंस्कृतिं प्रति भगवद्भक्तिं च प्रति आकृष्टं भविष्यति। पश्चात् अक्षरशः पठितानाम् अंशानां सत्यमार्गमनुसरता तेन तथा व्याख्या करणीया यथा ग्रामवासिनः सन्तुष्टाः पूर्णमनोरथा भवेयुः। एवं प्रतिदिनं होराचतुष्टयं यावत् विद्यालये पुराणपाठस्तदालोचनं यदि प्रचलेत् तदानीं ग्रामवासिनां महानुपकारः अस्माकमपि कर्त्तव्यसम्पादनकरणात् कथञ्चन सन्तोषः स्यात् देशस्य च समुन्नतिर्भविष्यति। एवं क्रमेण एकस्य पुराणस्यानन्तरमन्यस्य तत्पश्चात् तृतीयस्य चतुर्थस्य च क्रमशः अष्टादशपुराणानाभुपपुराणानां महाभारतरामायणादीनां भूयोभूयः पारायणमालोचनमध्यापनञ्च यदि ग्रामेषु प्रचलेत् तदानीं ग्रामाः सर्वे स्वर्गतुल्याः भविष्यन्तीति मे विश्वासः। यदि कश्चित् जनः पुराणाध्ययनं विधाय तस्मिन् परीक्षामपि दातुमिच्छेत् तदानीं तस्यापि दरभङ्गादिसंस्कृतविश्वविद्यालयद्वारा व्यवस्था भवितुमर्हति। एतदेव विशेषतोऽत्रावधेयम् यत् पुराणवाचको यथा सर्वथा सुयोग्यो भवेत्, न सत्यनारायणकथावत् पुराणमपि वाचयेत्, तथा यत्नः करणीयः। एतदर्थञ्च संस्कृतविश्वविद्यालयैर्भारो ग्राह्यः। आधुनिकविविधशास्त्राचार्योपाधिभूषितानामपि योग्यतां सर्वथा परीक्ष्यैव कार्यस्यास्य भारः पूर्वमस्थायिरूपेण तेषु देयः। यदि षड्मासानन्तरं वर्षानन्तरं वा ते योग्याः कार्यदक्षाः इति प्रमाणितं भवेत् तदा तेषां स्थिरा नियुक्तिर्विधेया।

अनेन विधिना संस्कृतज्ञानां विदुषामितस्ततो भ्रान्तानां जीविकासमस्यापि कथञ्चित् सरला लघीयसी च भविष्यति। अपि तु तैः पुराणवाचकैः सह यदा ग्रामवासिनां सौहार्दं स्थापितं भविष्यति तदा ते पौराणिकस्यैवानुरोधेन सद्विचारेण च राजनीतिकसामाजिकादीनि सर्वाणि कार्याणि अपि साधयिष्यन्तीति स्वभावसिद्धम्। ते पण्डिताः पुनर्विश्वविद्यालयाधीनाः राज्यशिक्षा-विभागसम्बद्धाः विश्व-

विद्यालयस्योन्नत्यै राज्यशिक्षाविभागस्य च कल्याणाय समये समये बद्धपरिकराः तेषां साहाय्येन च ग्रामीणजनाः अपि देशकल्याणाय सन्नद्धाः अनायासेनैव भविष्यन्तीति विशेषो लाभः। संस्कृताध्ययनादिकं प्रति विश्वविद्यालयं च प्रति तेषामपि साहाय्यं सहयोगश्च सम्भवति। आर्थिकलाभोऽपि भवितुमर्हति। इयान् उपकारः सम्भाव्यते। राज्यशिक्षाध्यक्षाणां च कर्त्तव्यमेवैतद्यत्तेषां कृतेऽपि ज्ञानविज्ञानानुशीलनादीनां व्यवस्था यथा भवेत् तथा यत्नः कृतो भवेत्। एवं सर्वतः कल्याणदायिनी देशजनहिताय ग्रामे-ग्रामे पुराणविद्यालयस्य स्थापना तद्व्यवस्था च नितरामपेक्षिता। एतत्तु यावत् राज्यशिक्षाविभागाध्यक्षैः केन्द्रीयैः प्रान्तीयैश्च न स्वीक्रियते तावन्न सफलतां यास्यति।

अस्मिन् विषये पुराणवाचकानां विदुषां कृते पारिश्रमिकद्रव्यादिव्यवस्थापि निम्नोल्लिखितप्रकारेण कथञ्चन भवितुमर्हति।

ग्रामीणैः विद्यालयस्य कृते एकस्य लघुगृहस्य निर्माणं प्रारम्भकाले सम्पादनीयम्। ते तथा करिष्यन्त्येवेति। अथ च विदुषां भोजनव्यवस्थापि तैरेव सम्पादनीया भविष्यतीत्यस्माकं विश्वासः। परन्तु विदुषां पारिश्रमिकं मासिकवेतनं यथायोग्यमन्ततः शतद्वयमुद्रात्मकं नितरामपेक्षितम्। तत्तु राज्यशिक्षाविभागाध्यक्षैः केन्द्रीयैः प्रान्तीयैश्च नूनं विधेयम्। तेषामेवोपरि सर्वथाऽस्य भारो निक्षिप्तः। एवं यदि सर्वैर्मिलित्वा व्यवस्था क्रियेत तदानीं लक्ष्यसिद्धिर्देशजनकल्याणञ्चावश्यमेव भवितुमर्हतीति। एवं कृते भारतीयसंस्कृतेः ज्ञानं, पुनरुद्धारः, प्रचारः, उन्नतिश्च भविष्यति। राष्ट्रस्य कर्त्तव्यमपि साधितं स्यात्।

श्रीमतां भवताममूल्यसमयो मया बहुकालं यावत् स्वभाषणेनाकृष्टः। यथामतिबहूक्तम् भारतीयसंस्कृतिविषये। अस्याः संस्कृतेरभ्युन्नतिर्वस्तुतः आत्मनोन्नतिरेवास्ति। आत्मैव सर्वतः सर्वेषां प्रियतमः। तदर्थं यावच्छक्यं यत्नो विधेयः। यदि संस्कृतिर्हता स्यात् तदा आत्मैव हतः स्यादिति न कदाचिदपि विस्मर्तव्यम्।

एतावत्कालपर्यन्तं यद्भवन्तः अनन्यमनसा ममाभिभाषणं श्रुत्वा मां प्रोत्साहितवन्तस्तदर्थमहं सर्वान् प्रति साधुवादान् वितरामि, आत्मनः कृतकृत्यतां प्रकटीकरोमि। परिषदोऽस्याः आयोजकाः यन्मामाहूय स्वहृद्गतभावान् प्रकाशयितुमवसरं प्रदत्तवन्तस्तदर्थं तान् प्रत्यपि पुनः पुनः सर्वथा कृतज्ञोऽस्मीत्युक्त्वा विरम्यते।

शान्तिः! शान्तिः!! शान्तिः!!!

